भाष्यप्रकाशः ।

वाच्या । अत एव सदंशभूतेष्वष्टाविंशतितत्त्वेषु तत्त्वमिति व्यपदेशः । एवं यदा आनन्द उत्कृष्टो जातस्तदेतरौ तं सेवमानौ जातौ । ततश्च तयोर्धर्मौ ज्ञानक्रिये भगवच्छक्तिरूपे जाते । तदा स आनन्दो ज्ञानक्रियाशक्तिमान् जातः । इत्येकस्वरूप उच्चनीचभावः । अथापरः सदंशस्तु क्रियाशक्तेर्गतत्वादंशेनाव्यक्ततामापद्यते प्रकृतिरूपो भवति । पश्चान्मूलभूतक्रियांशाभिः क्रियाभिर्यथायथं श्रौतेन पौराणेन वा प्रकारेणाभिव्यज्यते । चिदंशस्तु ज्ञानधर्मस्यानन्दे गतत्वादंशेन पुरुषो जीवसमष्टिरूपो मुख्यजीवो भवति । तदा चिदंशस्य शक्तिर्माया तं व्यामोहयति । तदा तया व्यामोहितो व्याकुलः सन् सदानन्दकृतसृष्टौ य आसन्य-

रश्मिः ।

इति गोपालतापिनीयात् । मायापदं तु श्वेताश्वतरे–'अस्मान् मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः । **अन्यो** जीवः [ नन्वानन्दमात्रकरपादमुखोदरादिः, आनन्दरूपममृतं यद्विभाति, आनन्दमयोभ्यासात् । को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् । दुःखाभावः सुखं चैव पुरुषार्थद्वयं मतमिति सुखं स्तूयतेऽतः कथमानन्दो जन्य इति चेन्न । 'अजायमानो बहुधा विजायते'इति श्रुत्या भविष्यतीति । ] नन्वानन्दस्य जन्यत्वात्केन प्रकारेण सर्वोत्कृष्टत्वमिति चेत्तत्राहुः एवमित्यादि । धर्मभेदेनोच्चनीचभावे करणस्य भेदरूपमायाघटितत्वेन मायायाश्च तमोरूपत्वेनानन्दे तु उत्कृष्टे उत्कृष्टत्वप्रकारकतामसबुद्धेरानन्दविशेष्यकत्वोत्कृष्टत्वप्रकारकत्वात् । **जाताविति** तथैवानुभवात् । 'सुखाय कर्माणि करोति जन्तुः' इति वाक्याच्च । सेवायामप्येवम् । मनुष्याधिकारात् । **ततश्चेति** आनन्दविरहात् । **तयोरिति** सच्चितोर्धर्मौ ज्ञानं वेदान्तोक्तं क्रिया वेदोक्ता च कारणीयौ कार्येपि स्वः तौ प्रवर्तकानन्दाभावादनभिव्यक्तौ स्वकारणे लीनाविति ज्ञानक्रिये भगवच्छक्तिरूपे जाते । **स इत्यादि** स उत्कृष्टः गुणरूपोप्यानन्दः ज्ञानगुणवानस्य समवायिसमवेतत्वसंबन्धेन । एकं रूपं रसात्पृथगियत्र रूपे एकत्वपृथक्त्ववत् । क्रिया कर्मणापि सन्निष्ठोक्तसंबन्धेनानन्दरूपगुणनिष्ठा । इत्यानन्दो ज्ञानक्रियाशक्तिमान्जात इत्यर्थः । उक्तक्रमे सतश्चिदनन्तरमुक्तत्वेऽपि सूचीकटाहन्यायेनाहुः **सदंशस्त्विति** । **गतत्वादिति** अनभिव्यक्तत्वात् । **अंशेनेति** विकृतिरूपेण । **प्रकृतीति** तदुक्तं 'धर्मो यस्यां मदात्मकः' इति वाक्येन । **क्रियाभिरिति** प्रयाजानुयाजादिरूपाभिः । **पौराणेनेति** । एकोनविंशाध्याय एकादशस्योक्तेन लौकिक्यपि ग्राह्या । सच्चिदानन्दब्रह्माग्रे इति प्रसिद्धम् । तदेवाग्रे यज्ञरूपमुक्त्वा ज्ञानरूपं वेदान्तशास्त्रभेदेनाहुः **चिदंश** इति । आनन्दांशस्तु कवीनां 'तदेव ब्रह्म परमं कवीनाम्' इति श्रुतेः । **ज्ञानेति** चितो ज्ञानरूपधर्मस्य प्रवर्तकानन्दाभावेनानभिव्यक्तस्य स्वकारणानन्दे **गतत्वात्** । **अंशेनेति** मूलांशेन । **पुरुषः** पुरमुपतीति पुरुषः । उप दाहे । स्वराड् । **जीवेति** । 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा' इति श्रुतेः । मुख्यत्वं द्वितीयरूपत्वम् । जीवमूलत्वमिति यावत् । तृतीयं सर्वभूतस्थम् । **मायेति** व्यामोहिका । तदुक्तम् । 'विराड् जीवस्तु भोगभुक्' । तमंशम् । 'यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् । परोपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते' ॥ इति समाधिभाषायाः । **सदानन्देति** सच्चिदानन्देषु । स्वेच्छया सदानन्दः कृष्णः । 'कृषिर्भूवाचकः' इति पञ्चरात्रशास्त्रात् । **चिदंशः** शब्दः । अतश्चिदंशशब्दप्रतिपाद्यसदानन्दरूपार्थसृष्टौ य इति प्रसिद्धः आसन्यः आस्ये भवः । केन रूपेण प्रसिद्ध इत्यत आहुः **सूत्रेति** । सूत्रात्मत्वेन

भाष्यप्रकाशः ।

रूपः सूत्रात्मा दशविधः प्राणस्तमवलम्ब्य तिष्ठति । ततो जीव इत्युच्यते प्राणधारणप्रयत्नवत्त्वात् । बोधरूपोऽप्ययम् । आनन्दस्य धर्मस्य पृथग्भूतत्वात्स्वरूपात्मकस्य च तिरोहितत्वादानन्दार्थं तया व्यामोहितस्तत्संबन्धादानन्दो भविष्यतीति बुद्ध्या तया संबध्यते आनन्दांशस्तु प्राज्ञरूपोऽन्तर्यामिसमष्टिरूपो भवति । अतः परं सतः प्रपञ्च उच्यते । तत्र क्रमे नानाविधः । मुण्डके, 'एतस्माज्जायते प्राणः' इति प्राणमनइन्द्रियाणामुत्पत्त्यनन्तरं खादिभूतोत्पत्तिः । प्रश्ने, प्राणः प्राणाच्छ्रद्धा भूतानि इन्द्रियं मनोऽन्नमिति । बृहदारण्यके, प्राण लोका देवा भूतानीति । ऐतरेये, लोका लोकपाला इत्यादि । महोपनिषदि तु दशेन्द्रियाणि मनस्तेजोऽहंकारः प्राणा बुद्धिस्तन्मात्रा महाभूतानीति । तत्र तेजो महान् प्राणाः प्राणसमुदायः । तैत्तिरीयादौ चाकाशादिक्रमेण सूक्ष्माणि महान्ति च भूतानि समुत्पादयति पञ्चतन्मात्रा भूतशब्देनोच्यन्ते । अथ पञ्चमहाभूतानि भूतशब्देनोच्यन्ते इति मैत्रायणीयश्रुतावुभयोरपि भूतपदेन संग्रहात् । एवमन्येऽपि प्रकारा निबन्धे दर्शिताः । अतो भूतानामेवैकविधः क्रमो, न प्राणेन्द्रियादीनाम् । आत्मनां तु व्युचरणं पश्चात् । कदाचिद्देहविशिष्ट

रश्मिः ।

प्रसिद्धः । ननु प्राणो वायुः सूत्रं बहिः कार्पासम् । अन्तस्तु को वेद । ईश्वरस्तु वेत्ति । 'अन्तःसूत्रं येन'इति श्रुतेः । परंतु बहिःसाम्याद्द्रव्यान्तरम् 'प्रजापतेर्यत्सहजं पुरस्तात्' इति श्रुतेरिति चेन्न ऊर्णनाभदृष्टान्तस्य द्वितीयस्कन्धनवमाध्याये उक्तत्वात्तदनुरोधेन प्राणेषु समानस्य नाभिस्थत्वेन सूत्रमात्मनि यस्य तादृशः संग्रहात् । सुबोधिन्यां तु सूत्रात्मक इति क उक्तः । नाभिकमलदण्डे सूत्राणि प्रजापतौ चेति कारणे तदावश्यकत्वात् । मूलस्य समानवायुत्वेनान्तःसूत्रस्य वायुत्वेन द्रव्यान्तरत्वाभावात् । एकरसत्वात् । किंचान्तर्यामिब्राह्मणे 'वायुर्वै गौतम तत्सूत्रम्'इति श्रुतेः सूत्रात्मा प्राणः समयेति । जीव प्राणधारणइति धातुपाठात् । शुद्धबुद्धमुक्तस्वभावः 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' 'विज्ञानघनः' इत्यादीनां श्रुतीनामयमेव विषय इत्याहुः बोधेति 'शब्द इति चेन्नातः प्रभवात्' इति सूत्रे चितः सृष्टिः । त्रिषु सदादिषु प्रकटेन व्यवहारः । अतः सदानन्दसृष्टिविरोधो न । अपिशब्देनोपक्रान्तसद्रूपः । अयमिति समष्टिरूपः । निर्धर्मकत्वान्निराकारत्वमाहुः आनन्दस्येति सच्चिदानन्दसृष्टित्वादानन्दधर्मत्वम् । स्वरूपेति । तत एव । आनन्दांशस्तु पूर्वमेव तिरोहितो येन जीवभाव इत्युक्तेस्तिरोहितत्वम् । आनन्दार्थमिति विषयानन्दार्थम् । ननु मायासंबन्धस्य भावित्वात्पूर्वं कुतस्तया व्यामोहित इति चेन्न । तयेत्यनेन तदपाश्रया माया भूतपूर्वा गृह्यत इति कार्यकरणत्वसंबन्धात् मायासंबन्धाद्विषयानन्दः भगवदानन्दो यद्यपि तथापि व्यामोहो विषयानन्दप्रवृत्तिहेतुः । संबध्यत इति 'यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् । परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ।' इति वाक्यात् । एवं कार्यरूपाश्चिदंशांशा ज्ञेयाः । आनन्दस्य स्वरूपलक्षणघटकत्वात्तद्विशेषस्वरूपमाहुः आनन्दांशस्त्विति । सर्वोत्कृष्टानन्दस्य विशेषः सुषुप्तिसाक्षी प्राज्ञस्तद्रूपोन्तर्यामिणामन्तर्यामिब्राह्मणप्रसिद्धानां पृथिव्याद्यन्तराणां समष्टिरूपो भवति । पदेनेति भूतपदेन अन्येपीति 'कदाचित्पुनरन्यथा'इति निबन्धात् । 'यथाग्नेः क्षुद्रा' इति श्रुतेराहुः आत्मनामिति

भाष्यप्रकाशः ।

एवेन्द्रियाधिष्ठातारः, कदाचिदिन्द्रियानन्तरमित्येवं कारणसृष्टिप्रक्रिया दर्शिता । विशिष्य तु द्वितीयस्कन्धसुबोधिनीतत्तत्प्रकाशान्मत्कृताचावगन्तव्या ॥ २२ ॥

इति दशमं मांसादिभौममित्यधिकरणम् ॥ १० ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य श्रीपीताम्बरात्मजस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥

समाप्तोयं द्वितीयोध्यायः ॥ २ ॥

रश्मिः ।

मुण्डक आत्मनोवतारा इति माध्वाः । इन्द्रियानन्तरमिति 'सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम्' इति श्रुत्युक्तेन्द्रियानन्तरं देहविशिष्टा इत्यर्थः ॥ २२ ॥

इति मांसादिभौममित्यधिकरणम् ॥ १० ॥

इति श्रीविठ्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायपौत्रेण संपूर्णवेत्रा विठ्ठलरायभ्रात्रीयेण गोकुलोत्सवात्मजगोपेश्वरेण कृते भाष्यप्रकाशरश्मौ द्वितीयाध्यायस्य चतुर्थः पादः संपूर्णतामगमत् ॥ २ ॥ ४ ॥

एतावतो ग्रन्थस्य श्लोकानां संख्या १४५२५ सार्धचतुर्दशसहस्रपञ्चविंशतिः इति ॥

